तद्दर्शनप्रत्यनीकत्वाद्, व्युत्थितचित्तस्योत्पद्यमानाः सिद्धयः ॥ ३७ ॥

**बन्धकारणशैथिल्यात् प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः ॥ ३८ ॥**

लोलीभूतस्य मनसोऽप्रतिष्ठस्य शरीरे कर्माशयवशाद्बन्धः प्रतिष्ठेत्यर्थः, तस्य कर्मणो बन्धकारणस्य शैथिल्यं समाधिबलाद् भवति, प्रचारसंवेदनं च चित्तस्य समाधिजमेव, कर्मबन्धक्षयात् स्वचित्तस्य प्रचारसंवेदनाच्च योगी चित्तं स्वशरीरान्निष्कृष्य शरीरान्तरेषु निक्षिपति, निक्षिप्तं चित्तं चेन्द्रियाण्यनु पतन्ति, यथा मधुकरराजानं मक्षिका उत्पतन्तमनूत्पतन्ति निविशमानमनु निविशन्ते तथेन्द्रियाणि परशरीरावेशे चित्तमनुविधीयन्त इति ॥ ३८ ॥

**उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च ॥ ३९ ॥**

चित्तो हि ताः सिद्धीः अभिमन्यते जन्मदुर्गत इव द्रविणकणिकामपि द्रविणसम्भारं योगिना तु समाहितचित्तेन उपनताभ्योऽपि ताभ्यो विरन्तव्यम्। अभिसंहित तापत्रयात्यन्तिकोपशमरूपपरमपुरुषार्थः स खल्वयं कथं तत्प्रत्यनीकासु सिद्धिः रज्येतेति सूत्रभाष्ययोरर्थः ॥ ३७ ॥

तदेवं ज्ञानरूपमैश्वर्यं प्रकृष्टधर्मान्तं संयमफलमुक्त्वा क्रियारूपमैश्वर्यं संयमफलमाह। बन्धकारण० आवेशः ॥ सू० ३८ ॥ समाधिबलाद् इति। बन्धकारणविषयसंयमबलात्, प्राधान्यात् समाधिग्रहणम्। प्रचरति अनेनास्मिन्निति प्रचारः, चित्तस्य गमाऽगमाऽध्वानो नाड्यः, तस्मिन् प्रचारे संयमात्तद्वेदनं, तस्मात्। बन्धकारणशैथिल्याच्च तेन प्रतिबध्यते, अप्रतिबद्धमप्युन्मार्गेण गच्छत् स्वशरीरादप्रत्यूहं निष्क्रामति न च परशरीरमाविशति, तस्मात्तत्प्रचारोऽपि ज्ञातव्यः। इन्द्रियाणि च चित्तानुसारीणि परशरीरे यथाऽधिष्ठानं निविशन्ते इति ॥ ३८ ॥

उदान इत्यादि सू० ॥३९॥ समस्तेन्द्रियवृत्तिर्जीवनं प्राणादिलक्षणा प्राणादयो

समस्तेन्द्रियवृत्तिः प्राणादिलक्षणा जीवनं, तस्य क्रिया-पञ्चतयी प्राणो मुखनासिकागतिराहृदयवृत्तिः, समं नयनात् समानश्चानाभिवृत्तिः, अपनयनादपान आपादतलवृत्तिः, उन्नयनादुदान आशिरोवृत्तिः, व्यापी व्यान इति, तेषां प्रधानः प्राणः। उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग, उत्-क्रान्तिश्च प्रयाणकाले भवति, तां वशित्वेन प्रतिपद्यते ॥ ३९॥

## समानजयाज्ज्वलनम् ॥ ४० ॥

जितसमानस्तेजस उपध्मानं कृत्वा ज्वलति ॥ ४० ॥

## श्रोत्राकाशयोः संबन्धसंयमाद् दिव्यं श्रोत्रम् ॥ ४१ ॥

लक्षणं यस्याः सा तथोक्ता। द्वयी इन्द्रियाणां वृत्तिर्बाह्याऽभ्यन्तरी च, बाह्या रूपाद्या-लोचनलक्षणा, आभ्यन्तरी तु जीवनं, स हि प्रयत्नभेदः शरीरोपगृहीतमारुतक्रिया-भेदहेतुः सर्वकरणसाधारणः, यथाहुः सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च इति, तैरस्य लक्षणीयत्वात्। तस्य प्रयत्नस्य, क्रिया कार्यं पञ्चतयी, प्राण आना-सिकायात् आ च हृदयादवस्थितः। अशितपीताहारपरिणतिभेदं रसं तत्र तत्र स्थाने समम् अनुरूपं नयन् समान, आ हृदयात् आ च नाभेरस्य स्थानम्। मूत्रपुरीषगर्भादीनामपनयनहेतुरपान, आनाभेरा च पादतलादस्य वृत्तिः। उन्नयनाद ऊर्द्ध्वनयनाद रसादीनामुदान, आ नासिकाऽग्रात् आ च शिरसो वृत्ति-रस्य। व्यापी व्यानः। एषामुक्तानां प्रधानं प्राणः, तदुत्क्रमे सर्वोत्क्रमश्रुतेः प्राणमुत्क्रामन्तमनु सर्वे प्राणा उत्क्रामन्ति इति। तदेवं प्राणादीनां क्रिया-स्थानभेदेन भेदं प्रतिपाद्य सूत्रार्थमवतारयति उदानजयाद इति। उदाने कृतसंयमस्तज्जयाज्जलादिभिर्न प्रतिहन्यते, उत्क्रान्तिश्चाऽर्चिरादिमार्गेण भवति प्रयाणकाले, तस्मात्ताम् उत्क्रान्तिं वशित्वेन प्रतिपद्यते, प्राणादिसंयमात्तद्विजये विभूतय एताः क्रियास्थानविजयादिभेदात् प्रतिपत्तव्याः ॥ ३९ ॥

समानम् ॥ ४० ॥ तैजसः शारीरस्योपध्मानम् उत्तेजनम् ॥ ४० ॥

स्वार्थसंयमादन्यायमिष्टं श्रावणादुक्तं सम्प्रति श्रावणाद्यर्थादेव संयमाच्छ्राव-

सर्वश्रोत्राणामाकाशं प्रतिष्ठा, सर्वशब्दानां च। यथोक्तं "तुल्यदेशश्रवणानामेकदेशश्रुतित्वं सर्वेषां भवति" इति। तच्चैतदाकाशस्य लिङ्गम्, अनावरणं चोक्तम्। तथाऽमूर्त्तस्याऽनावरणदर्शनाद्विभुत्वमपि प्रख्यातमाकाशस्य, शब्दग्रहणाऽनुमितं श्रोत्रं, बधिराबधिरयोरेकः शब्दं गृह्णाति अपरो न गृह्णातीति तस्माच्छ्रोत्रमेव शब्दविषयम्। श्रोत्राकाशयोः संबन्धे कृतसंयमस्य योगिनोदिव्यं श्रोत्रं प्रवर्त्तते ॥ ४१ ॥

णादि भवतीत्याह श्रोत्र इत्यादि सू० ॥ ४१॥ संयमविषयं श्रोत्राऽकाशयोः सम्बन्धमाधाराऽधेयभावमाह सर्व इति। सर्वश्रोत्राणामाहङ्कारिकाणामप्याकाशं कर्णशष्कुलीविवरं प्रतिष्ठा, तदायतनं श्रोत्रं, तदुपकाराभ्यां श्रोत्रस्योपकाराऽपकारदर्शनात्। शब्दानां च श्रोत्रसहकारिणाम्, पार्थिवादिशब्दग्रहणे कर्त्तव्ये कर्णशष्कुलीसुषिरवर्त्ति श्रोत्रं स्वाऽश्रयणभोगताऽसाधारणशब्दमपेक्षते, गन्धादिगुणसहकारिभिर्घ्राणादिभिर्बाह्यं पृथिव्यादिवर्त्ति गन्धाद्यालोचने कार्य्ये दृष्टम्, आहङ्कारिकमपि घ्राणरसनत्वक्चक्षुःश्रोत्रं भूताऽधिष्ठानमेव भूतोपकाराऽपकाराभ्यां घ्राणादीनामुपकाराऽपकारदर्शनादित्युक्तम्। तच्चेदं श्रोत्रमाहङ्कारिकमयः प्रतिमयस्कान्तमणिकल्पेन वक्तृवक्त्रसमुत्पन्नेन वक्त्रस्थेन शब्देनाकृष्टं स्ववृत्ति[illegible]पर्यया वक्तृवक्त्रमागतं शब्दमालोचयति, तथाच दिग्देशभक्तिशब्दप्रती[illegible], प्राणभृन्मात्रस्य नाऽस्ति बाधकेऽप्रमाणीकृता भविष्यतीति। तथा च पञ्चशिखस्य वाक्यं तुल्यदेशश्रवणानामेकदेशश्रुतित्वं सर्वेषां भवति इति। तुल्यदेशानि श्रवणानि श्रोत्राणि येषां चैत्रादीनां ते तथोक्ताः, सर्वेषां श्रवणान्याकाशवर्त्तीनीत्यर्थः। तच्च श्रोत्राऽधिष्ठानमाकाशं शब्दगुणतन्मात्रादुत्पन्नं शब्दगुणकं, येन शब्देन सहकारिणा पार्थिवादीन् शब्दान् गृह्णाति, तस्मात्सर्वेषामेकजातीया श्रुतिः शब्दे इत्यर्थः। तदनेन श्रोत्राऽधिष्ठानत्वमाकाशस्य शब्दगुणत्वं च दर्शितम् इति। तच्च एकदेशश्रुतित्वमाकाशस्य लिङ्गं, सा हि एकजातीया शब्दव्यञ्जिका श्रुतिर्यदाश्रया तदेवाऽकाशशब्दवाच्यं, नह्येतादृशीं श्रुतिमन्तरेण शब्दव्यक्तिः, न चेदृशी श्रुतिः पृथिव्यादिगुणस्तस्य स्वाऽत्मनि व्यङ्ग्यव्यञ्जकत्वाऽनुपपत्तेः इति। अनावरणं चाऽकाशलिङ्गम् यद्याकाशं नाऽभविष्यदन्योऽन्यं सम्पीडितानि मूर्त्तानि न सूचीभिरप्यभेत्स्यन्त, ततश्च सर्वैरेव संमावृतं स्याद्, न च मूर्त्तद्रव्याऽभावमात्रादेवाऽनावरणम्, अस्याऽभावस्य भावाऽश्रितत्वेन तदभावेऽभावाद्, न च चितिशक्तिस्तस्याऽश्रया भवितुमर्हति, अपरिणामित्वाऽवच्छेदकत्वाऽभावाद्, न च दिक्कालादयः पृथिव्या-

**कायाकाशयोः सम्बन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम् ॥ ४२ ॥**

यत्र कायस्तत्र आकाशं तस्य अवकाशदानात् कायस्य, तेन सम्बन्धः प्राप्तिः, तत्र कृतसंयमो जित्वा तत्सम्बन्धं लघुषु तूलादिषु आपरिमाणुभ्यः समापत्तिं लब्ध्वा जितसम्बन्धो लघुः, लघुत्वाच्च जले पादाभ्यां विहरति, ततस्तूर्णनाभितन्तुमात्रे विहृत्य रश्मिषु विहरति, ततो यथेष्टमाकाशगतिः अस्य भवतीति ॥ ४२ ॥

**वहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः ॥ ४३ ॥**

शरीरात् वहिर्मनसो वृत्तिलाभो विदेहा नाम धारणा, सा यदि शरीरप्रतिष्ठस्य मनसो वहिर्वृत्तिमात्रेण भवति सा

द्दिद्रव्यव्यतिरिक्ताः सन्ति, तस्मात्ताद्दृशः परिणतिभेदो नभस एवेति सर्वमवदातम् । अनावरणं चाऽकाशलिङ्गं सिद्धं यत्र यत्राऽनावरणं तत्र सर्वत्राऽकाशमिति सर्वगतत्वमप्यस्य सिद्धमित्याह तथाऽमूर्त्तस्य इति, श्रोत्रसद्भावे प्रमाणमाह शब्दग्रहण इति । क्रिया हि करणसाध्या दृष्टा यथा छिदादिर्वास्यादिसाध्या, तदिह शब्दग्रहणक्रिययाऽपि करणसाध्यया भवितव्यं, यच्च करणं तच्च श्रोत्रमिति । अथाऽस्याः चक्षुरादय एव कस्मात्कारणं न भवन्तीत्यत आह वधिराऽवधिरयोः इति । अन्वयव्यतिरेकाभ्यामवधारणम् । उपलक्षणं चैतत् त्वग्वातयोश्चक्षुस्तेजसो रसनोदकयोर्नासिकापृथिव्योः सम्बन्धसंयमाद् दिव्यत्वगाद्यप्यूहनीयम् ॥४१॥

काय इत्यादि सू० ॥ ४२ ॥ कायाऽकाशसम्बन्धसंयमाद्वा लघुनि वा तूलादौ कृतसंयमात् समापत्तिं चेतसस्तत्स्यतदञ्जनतां लब्ध्वेति । सिद्धिक्रममाह जले इति ॥ ४२ ॥

अपरमपि परशरीरावेशहेतुं संयमं क्लेशकर्मविपाकक्षयहेतुमाह सू० वहिः क्षयः ॥ ४३ ॥ विदेहामाह शरीराद इति, अकल्पितायाः महाविदेहाया य उपायत्वात् प्रदर्शनाय कल्पितां विदेहामाह सा यदि इति, वृत्तिमात्रं कल्पनामात्र-

कल्पिता इति उच्यते, या तु शरीरनिरपेक्षा बहिर्भूतस्यैव मनसो बहिर्वृत्तिः सा खलु अकल्पिता, तत्र कल्पितया साधयति अकल्पितां महाविदेहामिति, यया परशरीराणि आविशन्ति योगिनः, ततश्च धारणातः प्रकाशात्मनो बुद्धिसत्त्वस्य यदावरणं क्लेशकर्मविपाकत्रयं रजस्तमोमूलं तस्य च क्षयो भवति ॥ ४३ ॥

स्थूलस्वरूपसूक्ष्माऽन्वयाऽर्थवत्त्वसंयमाद् भूतजयः ॥ ४४ ॥

तत्र पार्थिवाद्याः शब्दादयो विशेषाः सहाकारादिभिर्धर्मैः स्थूलशब्देन परिभाषिताः, एतद् भूतानां प्रथमं रूपम्। द्वितीयं रूपं स्वसामान्यम्, मूर्त्तिर्भूमिः, स्नेहो जलं,

मात्रं तेन। महाविदेहामाह या तु इति, उपायोपेयते कल्पिताऽकल्पितयोराह तत्र इति, किं परशरीरावेशमात्रमितो, नेत्याह ततश्च इति, ततो धारणातो महाविदेहाया मनःप्रवृत्तेः सिद्धेः, क्लेशश्च कर्म च ताभ्यां विपाकत्रयं जात्यायुर्भोगाः तदेतद्रजस्तमोमूलं, विगलितरजस्तमसः सत्त्वमात्राद् विवेकख्यातिमात्रसमुत्पादात्, तदेतद्विपाकत्रयं रजस्तमोमूलतया तदात्मकं सद्बुद्धिसत्त्वमावृणोति, तत्क्षयाच्च निरावरणं योगिचित्तं यथेच्छं विहरति विजानाति चेति ॥ ४३ ॥

स्थूल इत्यादि सू० ॥४४॥ स्थूलं च स्वरूपं च सूक्ष्मं चाऽन्वयश्चाऽर्थवत्त्वं चेति स्थूलस्वरूपसूक्ष्माऽन्वयाऽर्थवत्त्वानि, तेषु संयमात्तज्जयः। स्थूलमाह तत्र इति, पार्थिवाः पाथसीयास्तैजसा वायवीया आकाशीयाः शब्दस्पर्शरूपरसगन्धा यथासम्भवं विशेषाः षड्जगान्धारादयः शीतोष्णादयः नीलपीतादयः कषायमधुरादयः सुरभ्यादयः, एते हि नामरूपप्रयोजनैः परस्परतो भिद्यन्त इति विशेषाः, एतेषां पञ्च पृथिव्यां, गन्धवर्जं चत्वारोऽप्सु, गन्धरसवर्जं त्रयस्तेजसि, गन्धरसरूपवर्जं द्वौ नभस्वति, शब्द एवाकाशे, त एते ईदृशा विशेषाः सहाकारादिभिर्धर्मैः स्थूलशब्देन परिभाषिताः शास्त्रे, तत्राऽपि पार्थिवास्तावद् धर्माः आकारो गौरवं रौक्ष्यं वरणं स्थैर्यमेव च। वृत्तिर्भेदः क्षमा कार्ष्ण्यं काठिन्यं सर्वभोग्यता। अपां धर्माः स्नेहः सौक्ष्म्यं प्रभा

वह्निरुष्णता, वायुः प्रणामी, सर्वतो गतिराकाश इति, एतत्स्वरूपशब्देन उच्यते, अस्य सामान्यस्य शब्दादयो विशेषाः। तथा चोक्तम् "एकजातिसमन्वितानामेषां धर्ममात्रव्यावृत्तिः" इति। सामान्यविशेषसमुदायोऽत्र द्रव्यं, द्विष्ठो हि समूहः प्रत्यस्तमितभेदाऽवयवाऽनुगतः शरीरं वृक्षो यूथं वनमिति। शब्देनोपात्तभेदावयवानुगतः समूहः उभये देवमनुष्याः, समूहस्य देवा एको भागो मनुष्या द्वितीयो भागः, ताभ्यामेव अभिधीयते समूहः। स च भेदाभेदविवक्षितः, आम्राणां वनं ब्राह्मणानां सङ्घः, आम्रवणं

शौक्लं मार्दवं गौरवं च यत्। शैत्यं रक्षा पवित्रत्वं सन्धानं चौदका गुणाः। तैजसा धर्मा ऊर्द्ध्वभाक् पावकं दग्धृ पाचकं लघु भास्वरम्। प्रध्वंस्योजस्वि वै तेज पूर्वाभ्यां भिन्नलक्षणम्। वायवीया धर्माः तिर्य्यग्यानं पवित्रत्वमाक्षेपो नोदनं बलम्। चलमच्छायता रौक्ष्यं वायोर्धर्माः पृथग्विधाः। आकाशीया धर्माः सर्वतो गतिरव्यूहो विष्टम्भश्चेति च त्रयः। आकाशधर्मा व्याख्याताः पूर्वधर्मविलक्षणा इति। त एत आकारप्रभृतयो धर्मास्तैः सहेति। आकारश्च सामान्यविशेषो गोत्वादिः। द्वितीयं रूपमाह द्वितीयं रूपं स्वसामान्यम् इति। मूर्त्तिः सांसिद्धिकं काठिन्यं, स्नेहो जलं मज्जा पुष्टिबलाऽधानहेतुः, वह्निरुष्णता चौदर्य्ये सौर्य्ये भौमे च सर्वत्रैव तेजसि समवेतोष्णतेति। सर्वं चैतद् धर्मधर्मिणोरभेदविवक्षयाऽभिधानं, वायुः प्रणामी वहनशीलः, तदाह चलनेन तृणादीनां शरीरस्याऽटनेन च सर्वगं वायुसामान्यं नामित्वमनुमीयते। सर्वतो गतिराकाशः, सर्वत्र शब्दोपलब्धिदर्शनात्, श्रोत्राऽश्रयाऽकाशगुणेन हि शब्देन पार्थिवादिशब्दोपलब्धिरित्युपपादितमधस्तात्, एतत् स्वरूपशब्देनोक्तम्। अस्यैव मूर्त्त्यादिसामान्यस्य, शब्दादयः षड्जादय उष्णत्वादयः शुक्लत्वादयः कषायत्वादयः सुरभित्वादयो मूर्त्त्यादीनां सामान्यानां भेदाः। सामान्यान्यपि मूर्त्त्यादीनि जम्बीरपनसाऽमलकफलादीनि रसादिभेदात्परस्परं व्यावर्त्तन्ते तेनैतेषामेते रसादयो विशेषाः। तथा चोक्तम् एकजातिसमन्वितानां प्रत्येकं पृथिव्यादीनामेकैकया जात्या मूर्त्तिस्नेहादिना समन्वितानामेषां षड्जादिधर्ममात्रव्यावृत्तिरिति। तदेवं सामान्यं मूर्त्त्याद्युक्तं विशेषाश्च शब्दादय उक्ताः ये त्वाहुः सामान्यविशेषाश्रयो द्रव्यमिति तान् प्रत्याह सामान्य इति, सामान्यविशेषसमुदायोऽत्र

ब्राह्मणसङ्घ इति, स पुनर्द्विविधो युतसिद्धाऽवयवोऽयुतसिद्धावयवश्च, युतसिद्धावयवः समूहो वनं सङ्घ इति, अयुतसिद्धावयवः सङ्घातः शरीरं वृक्षः परमाणुरिति। अयुतसिद्धावयवभेदानुगतः समूहो द्रव्यमिति पतञ्जलिः, एतत्स्वरूपमित्युक्तम्। अथ किमेषां सूक्ष्मरूपं, तन्मात्रं भूतकारणं, तस्यैकोऽवयवः परमाणुः सामान्यविशेषात्मायुतसिद्धावयवभेदानुगतः समुदाय इति, एवं सर्वतन्मात्राणि, एतत्तृतीयम्। अथ भूतानां चतुर्थं रूपं ख्यातिक्रियास्थितिशीला गुणाः कार्यस्वभावानुपातिनोऽन्वयशब्देन उक्ताः। अथैषां पञ्चमं रूपमर्थवत्त्वं, भोगापवर्गार्थता गुणेषु अन्वयिनी गुणास्तन्मात्रभूतभौतिकेषु इति सर्वमर्थवत्। तेषु इदानीं भूतेषु पञ्चसु

दर्शने द्रव्यम्। यैऽपि तदाश्रयौ द्रव्यमास्थिषत तैरपि तत्समुदायोऽनुभूयमानो नाऽपह्नोतव्यः, न च तदपह्नवे तयोराधारो द्रव्यमिति भवति, तस्मात्तदेवाऽस्तु द्रव्यं न तु ताभ्यां तत्समुदायाच्च तदाधारमपरं द्रव्यमुपलभामहे ग्रावभ्यो ग्रावसमुदायादिवत् च तदाधारमपरं पृथग्विधं शिखरं समूहो द्रव्यमित्युक्तम्। तत्र समूहमात्रं द्रव्यमिति भ्रमाऽपनुत्तये समूहे विशेषो द्रव्यमिति निर्धारयितुं समूहप्रकारानाह द्विष्ठो हि इति, यस्मादेवं तस्मान्न समूहमात्रं द्रव्यमित्यर्थः। द्वाभ्यां प्रकाराभ्यां तिष्ठतीति द्विष्ठः, एकं प्रकारमाह प्रत्यस्तमित इति, प्रत्यस्तमितो भेदो येषामवयवानां ते तथोक्ताः, प्रत्यस्तमितभेदा अवयवा यस्य स तथोक्तः। एतदुक्तं भवति, शरीरवृक्षयूथवनशब्देभ्यः समूहः प्रतीयमानोऽप्रतीतावयवभेदस्तद्वाचकशब्दाऽप्रयोगात् समूह एवाऽवगम्यत इति। युताऽयुतसिद्धाऽवयवत्वेन चेतनाऽचेतनत्वेन चोदाहरणचतुष्टयं, युताऽयुतसिद्धाऽवयवत्वं चाऽग्रे वक्ष्यते। द्वितीयं प्रकारमाह शब्देनोपात्तभेदाऽवयवाऽनुगतः समूह उभये देवमनुष्या इति, देवमनुष्या इति हि शब्देनोभयशब्दवाच्यस्य समूहस्य भागौ भिन्नावुपात्तौ। ननु उभयशब्दात्तदवयवभेदो न प्रतीयते तत्कथमुपात्तभेदाऽवयवाऽनुगत इत्यत आह ताभ्याम् इति, ताभ्यां भागाभ्यामेव च समूहोऽभिधीयते, उभयशब्देन भागद्वयवाचिशब्दसहितेन समूहो वाच्यः वाक्यस्य वाक्यार्थवाचकत्वादिति भावः। पुनर्द्वैविध्यमाह स च इति, भेदेन चाऽभेदेन च विवक्षितः, भेदविवक्षितमाह आम्राणां वनं ब्राह्मणानां सङ्घ इति, भेद एव षष्ठी श्रुतेर्यथा गर्गाणां गौरिति।

पञ्चरूपेषु संयमात्तस्य तस्य रूपस्य स्वरूपदर्शनं जयश्च प्रादुर्भवति, तत्र पञ्च भूतस्वरूपाणि जित्वा भूतजयी भवति, तज्जयाद् वत्सानुसारिण्य इव गावोऽस्य सङ्कल्पानुविधायिन्यो भूतप्रकृतयो भवन्ति ॥ ४४ ॥

**ततोऽणिमादिप्रादुर्भावः कायसम्पत्तद्धर्मानभिघातश्च ॥ ४५ ॥**

तत्र अणिमा भवति अणुः, लघिमा लघुर्भवति, महिमा महान् भवति, प्राप्तिः अङ्गुल्यग्रेणाऽपि स्पृशति चन्द्रमसम्,

अभेदविवक्षितमाह आम्रवनं ब्राह्मणसङ्घ इति। आम्राश्च ते वनं चेति, समूहसमूहिनोरभेदं विवक्षित्वा सामानाधिकरण्यमित्यर्थः। विधान्तरमाह स पुनर्द्विविध इति, युतसिद्धाऽवयवः समूहः युतसिद्धाः पृथक् सिद्धाः सान्तराला अवयवा यस्य स तथोक्तः, यूथं वनमिति सान्तराला हि तदवयवा वृक्षाश्च गावश्च। अयुतसिद्धाऽवयवश्च समूहो वृक्षो गौः परमाणुरिति, निरन्तरा हि तदवयवाः सामान्यविशेषाः वा सास्नादयो वेति। तदेतेषु समूहेषु द्रव्यभूतं समूहं निर्धारयति अयुतसिद्ध इति। तदेवं प्रासङ्गिकं द्रव्यं व्युत्पाद्य प्रकृतमुपसंहरति एतत् स्वरूपमित्युक्तम् इति। तृतीयं रूपं विवक्षुः पृच्छति अथ इति, उत्तरमाह तन्मात्रम् इति, तस्यैकोऽवयवः परिणामभेदः परमाणुः, सामान्यं मूर्त्तिः शब्दादयो विशेषाः तदात्मा, अयुतसिद्धा निरन्तरा येऽवयवाः सामान्यविशेषास्तद्भेदेष्वनुगतः समुदायः, यथा च परमाणुः सूक्ष्मं रूपमेवं सर्वतन्मात्राण्यपि सूक्ष्मं रूपमिति। उपसंहरति एतदिति। अथ भूतानां चतुर्थं रूपं ख्यातिक्रियास्थितिशीला गुणाः कार्य्यस्वभावाऽनुपातिनः कार्य्यस्वभावमनुपतितुमनुगन्तुं शीलं येषां ते तथोक्ताः, अत एवाऽन्वयशब्देनोक्ताः। अथैषां पञ्चमं रूपमर्थवत्त्वं अर्थवत्त्वं विवृणोति भोग इति। नन्वेवमपि सन्तु गुणा अर्थवन्तः, तत्कार्य्याणान्तु कुतोऽर्थवत्त्वमित्यत आह गुणा इति। भौतिका गोघटादयः। तदेवं संयमविषयमुक्त्वा संयमं तत्फलं चाऽऽह तेषु इति। भूतप्रकृतय भूतस्वभावाः ॥४४॥

सङ्कल्पाऽनुविधाने भूतानां किं योगिनः सिद्ध्यतीत्यत आह सू० ततोऽणिमादिश्च ॥ ४५ ॥ स्थूलसंयमजयास्ततः सिद्धयो भवन्तीत्याह तत्र इति, अणिमा महानपि भवत्यणुः, लघिमा महानपि लघुर्भूत्वेषीकातूलवदाऽऽकाशे विहरति,

प्राकाम्यम् इच्छानभिघातो, भूमावुन्मज्जति निमज्जति यथोदके, वशित्वम् भूतभौतिकेषु वशीभवति, अवश्यश्चा-ऽन्येषां, ईशितृत्वं तेषां प्रभवाऽप्ययव्यूहानामीष्टे, यत्र का-मावसायित्वं सत्यसङ्कल्पता, यथा सङ्कल्पस्तथा भूतप्रकृती-नामवस्थानं, न च शक्तोऽपि पदार्थविपर्य्यासं करोति; कस्मात्, अन्यस्य यत्र कामावसायिनः पूर्वसिद्धस्य तथा भूतेषु सङ्कल्पादिति, एतानि अष्टौ ऐश्वर्य्याणि। कायसम्पद् वक्ष्यमाणा। तद्धर्मानभिघातश्च पृथ्वी मूर्त्या न निरुणद्धि योगिनः शरीरादिक्रियां, शिलामप्यनुप्रविशतीति, नाऽपः स्निग्धाः क्लेदयन्ति, नाऽग्निरुष्णो दहति, न वायुः प्रणामी वहति, अनावरणात्मकेऽपि आकाशे भवति आवृतकायः, सिद्धानामपि अदृश्यो भवति॥ ४५॥

महिमा अल्पोऽपि नागनगनगरपरिमाणो भवति, प्राप्तिः सर्वे भावाः सन्निहिता भवन्ति योगिनः, तद्यथा भूमिष्ठ एवाऽङ्गुल्यग्रेण स्पृशति चन्द्रमसम्। स्वरूप-संयमविजयात्सिद्धिमाह प्राकाम्यमिच्छाऽनभिघात इति, नाऽस्य रूपं ... मूर्त्यादिभिरभिहन्यते भूमावुन्मज्जति निमज्जति च यथोदके। अविषय-संयमजयात्सिद्धिमाह वशित्वम् इति, भूतानि पृथिव्यादीनि, भौतिकानि गोघटा-दीनि, तेषु वशी स्वतन्त्रो भवति तेषान्त्ववश्यः, तत्कारणतन्मात्रपृथिव्यादिपरमाणु-वशीकारात्तत्कार्य्यवशीकारः, तेन यानि यथाऽवस्थापयति तानि तथाऽवतिष्ठन्त इत्यर्थः। अन्वयविषयसंयमजयात्सिद्धिमाह ईशितृत्वम् इति, तेषां भूतभौति-कानां विजितमूलप्रकृतिः सन् यः प्रभव उत्पादो यश्चाऽप्ययो विनाशो यश्च व्यूहः यथावदवस्थापनं तेषामीष्टे। अर्थवत्त्वसंयमात्सिद्धिमाह यत्र कामाऽवसायित्वं सत्यसङ्कल्पता इति, विजितगुणाऽर्थवत्त्वो हि योगी यद् यदर्थतया सङ्कल्पयति तत् तस्मै प्रयोजनाय कल्पते, विषमप्यमृतकार्य्ये सङ्कल्प्य भोजयन् जीवयतीति। स्यादेतद्, यथा शक्तिविपर्य्यासं करोत्येवं पदार्थविपर्य्यासमपि कस्मान्न करोति, यथा चन्द्रमसमादित्यं कुर्य्यात्कुहूं च सिनीवालीमित्यत आह न च शक्तोऽपि इति, न हि ते यत्र कामाऽवसायिनस्तत्र भगवतः परमेश्वरस्याऽऽज्ञामुत्क्रमितु-मुत्सहन्ते, अतश्च पदार्थानां जातिदेशकालाऽवस्थाभेदेनाऽनियतस्वभावा इति युज्यते वास्तु वदिच्छाऽनुविधानमिति, एतानि अष्टौ ऐश्वर्य्याणि। तद्धर्माऽनभिघात

**रूपलावण्यबलवज्रसंहननत्वानि कायसम्पद् ॥ ४६ ॥**

दर्शनीयः कान्तिमान् अतिशयबलो वज्रसंहननश्चेति ॥ ४६ ॥

**ग्रहणस्वरूपाऽस्मिताऽन्वयाऽर्थवत्त्वसंयमादिन्द्रियजयः ॥ ४७ ॥**

सामान्यविशेषात्मा शब्दादिर्ग्राह्यः, तेषु इन्द्रियाणां वृत्तिर्ग्रहणं, न च तत्सामान्यमात्रग्रहणाकारं, कथमनालोचितः स विषयविशेष इन्द्रियेण मनसाऽनुव्यवसीयेतेति । स्वरूपं पुनः प्रकाशात्मनो बुद्धिसत्त्वस्य सामान्यविशेषयोरयुतसिद्धाऽवयवभेदाऽनुगतः समूहो द्रव्यमिन्द्रियम् । तेषां तृतीयं रूपमस्मितालक्षणोऽहङ्कारः, तस्य सामान्यस्येन्द्रियाणि विशेषाः । चतुर्थं रूपं व्यवसायात्मकाः प्रकाशक्रियास्थितिशीला गुणाः,

इति, अणिमादिप्रादुर्भाव इत्यनेनैव तद्धर्माऽनभिघातसिद्धौ पुनरुपादानं काय-सिद्धिवद् एतत्सूत्रोपवर्णितसकलविषयसंयमफलवत्त्वज्ञापनाय । सुगममन्यद् ॥४५॥

कायसम्पदमाह सू० रूप इत्यादि ॥ ४६ ॥ वज्रस्येव संहननम् अवयवव्यूहो दृढो निबिड़ो यस्य स तथा तस्य भावस्तत्त्वमिति ॥ ४६ ॥

जितभूतस्य योगिन इन्द्रियजयोपायमाह सू० ग्रहण इत्यादि ॥ ४७ ॥ ग्रहणं च स्वरूपं चाऽस्मिता चान्वयश्चाऽर्थवत्त्वं च तेषु संयमस्तस्मादित्यर्थः । गृह्णातीति-यं ग्रहणं तच्च शास्त्राऽधीननिरूपणमिति शास्त्रं दर्शयति सामान्यविशेषात्मा इति । शास्त्रमुक्त्वा ग्रहणमाह तेषु इति, वृत्तिः आलोचनं, विषयाकारा परिणतिरिति यावत् । ये त्वाहुः सामान्यमात्रगोचरेन्द्रियवृत्तिरिति तान् प्रत्याह न च इति, गृह्यत इति ग्रहणं, सामान्यमात्रगोचरं ग्रहणं, बाह्येन्द्रियतन्त्रं हि मनो बाह्ये प्रवर्त्ततेऽन्यथाऽन्धबधिराद्यभावप्रसङ्गात्, तदिह यदि न विशेषविषयमिन्द्रियं तेनाऽनालोचितो विशेष इति कथं मनसाऽनुव्यवसीयेत, तस्मात्सामान्यविशेष-

येषामिन्द्रियाणि साहङ्काराणि परिणामः। पञ्चमं रूपं गुणेषु यदनुगतं पुरुषार्थवत्त्वमिति। पञ्चस्वेतेषु इन्द्रियरूपेषु यथाक्रमं संयमः तत्र तत्र जयं कृत्वा पञ्चरूपजयादिन्द्रियजयः प्रादुर्भवति योगिनः ॥ ४७ ॥

**ततो मनोजवित्वं विकरणभावः प्रधानजयश्च ॥ ४८ ॥**

कायस्यानुत्तमो गतिलाभो मनोजवित्वं, विदेहानामिन्द्रियाणामभिप्रेतदेशकालविषयापेक्षो वृत्तिलाभो विकरणभावः, सर्वप्रकृतिविकारवशित्वं प्रधानजय इति, एतास्तिस्रः सिद्धयो मधुप्रतीका उच्यन्ते, एताश्च करणपञ्चकरूपजयादधिगम्यन्ते ॥ ४८ ॥

विषयमिन्द्रियाऽऽलोचनमिति, तदेतद् ग्रहणमिन्द्रियाणां प्रथमं रूपम्। द्वितीयं रूपमाह स्वरूपं पुनः इति, अहङ्कारो हि सत्त्वभागेनाऽऽत्मीयेनेन्द्रिय[illegible]जनय त्यतो यत्तत्र करणत्वं सामान्यं यच्च नियतरूपादिविषयत्वं विशेषः तदुभयमपि प्रकाशात्मकमित्यर्थः। तेषां तृतीयं रूपम् इति अहङ्कारो हि इन्द्रियाणां कारणमिति यत्रेन्द्रियाणि तत्र तेन भवितव्यमिति सर्वेन्द्रियसाधारण्यात् सामान्यमिन्द्रियाणामित्यर्थः। चतुर्थं रूपम् इति, गुणानां हि द्वैरूप्यं व्यवसायात्मकत्वं व्यवसेयात्मकत्वं च तत्र व्यवसेयात्मकतां ग्राह्यतामास्थाय पञ्चतन्मात्राणि भूतभौतिकानि च निर्मिमते, व्यवसायात्मकत्वं तु ग्रहणरूपमास्थाय साऽहङ्काराणि इन्द्रियाणीत्यर्थः, शेषं सुगमम् ॥ ४७ ॥

पञ्चरूपेन्द्रियजयात् सिद्धीराह सू० तत इत्यादि ॥ ४८ ॥ विदेहानामिन्द्रियाणां करणभावो विकरणभावः। देशः काश्मीरादिः, कालः अतीतादिः, विषयः सूक्ष्मादिः। साध्वीन्द्रियजयात्सर्वप्रकृतिविकारवशित्वं प्रधानजयः। ता एताः सिद्धयो मधुप्रतीका इत्युच्यन्ते योगशास्त्रनिष्णातैः। आहैतत्, इन्द्रियजयादिन्द्रियाणि सविषयाणि वश्यानि भवन्तु प्रधानादीनां तत्कारणानां किमायातमित्यत आह एताश्च इति, करणानाम् इन्द्रियाणां पञ्चरूपाणि ग्रहणादीनि

सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावा-ऽधिष्ठातृत्वं सर्वज्ञातृत्वं च ॥ ४९ ॥

निर्धूतरजस्तमोमलस्य बुद्धिसत्त्वस्य परे वैशारद्ये परस्यां वशीकारसंज्ञायां वर्तमानस्य सत्त्वपुरुषान्यताख्यातिमात्ररूपप्रतिष्ठस्य सर्वभावाधिष्ठातृत्वं, सर्वात्मानो गुणा व्यवसायव्यवसेयात्मकाः स्वामिनं क्षेत्रज्ञं प्रत्यशेषदृश्यात्मत्वेनोपतिष्ठन्त इत्यर्थः। सर्वज्ञातृत्वं सर्वात्मनां गुणानां शान्तोदिताव्यपदेश्यधर्मत्वेन व्यवस्थितानामक्रमोपारूढं विवेकजं ज्ञानमित्यर्थः इत्येषा विशोका नाम सिद्धिः यां प्राप्य योगी सर्वज्ञः क्षीणक्लेशबन्धनो वशी विहरति ॥ ४९ ॥

तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ॥५०॥

यदा चास्यैवं भवति क्लेशकर्मक्षये सत्त्वस्यायं विवेकप्रत्ययो

वैशारद्यात्, एतदुक्तं भवति नेन्द्रियमात्रजयस्तेन विजयोऽपि तु पञ्चरूपस्य, तदन्तर्गतं च प्रधानादीति ॥ ४८ ॥

त एते ज्ञानक्रियारूपैश्वर्यहेतवः संयमाः साक्षात्पारम्पर्येण च स्वसिद्ध्युपसंहारसम्पादितश्रद्धाद्वारेण यदर्थास्तां सत्त्वपुरुषान्यताख्यातेरवान्तरविभूतिं दर्शयति सू० सत्त्व इत्यादि ॥४९॥ निर्धूतरजस्तमोमलतया वैशारद्यं, ततः परा वशीकारसंज्ञा। रजस्तमोभ्यामुपप्लुतं हि चित्तसत्त्वमवश्यमासीत्तदुपशमे तु तद्वश्यं योगिनो वशिनः, तस्मिन् वश्ये योगिनः सत्त्वपुरुषान्यताख्यातिमात्ररूपप्रतिष्ठस्य सर्वभावाऽधिष्ठातृत्वम्। एतदेव विवृणोति, सर्वात्मान इति व्यवसायव्यवसेयात्मानः ग्रहणग्राह्यरूपा इत्यर्थः, तदनेन क्रियैश्वर्यमुक्तं, ज्ञानैश्वर्यमाह सर्वज्ञातृत्वम् इति अस्या अपि द्विविधायाः सिद्धेर्वैराग्याय योगिजनप्रसिद्धां संज्ञामाह एषा विशोका इति। क्लेशाश्च बन्धनानि च कर्माणि तानि क्षीणानि यस्य स तथा ॥ ४९ ॥

संयमान्तराणां पुरुषार्थाभासफलत्वात् विवेकख्यातिसंयमस्य पुरुषार्थतां दर्शयितुं विवेकख्यातेः परवैराग्योपजननद्वारेण कैवल्यं फलमाह सू० तद्वैरा-

नित्यं यत्नोपचर्य्यः प्रमादो लब्धविवरः क्लेशानुत्तम्भयिष्यति, ततः पुनरनिष्टप्रसङ्गः, एवमस्य सङ्गस्मयावकुर्वतो भावितोऽर्थो दृढीभविष्यति, भावनीयश्चाऽर्थोऽभिमुखीभविष्यतीति ॥ ५१ ॥

**क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम् ॥ ५२ ॥**

यथाऽपकर्षपर्य्यन्तं द्रव्यं परमाणुरेवं परमापकर्षपर्य्यन्तः कालः क्षणः, यावता वा समयेन चलितः परमाणुः पूर्वदेशं जह्यादुत्तरदेशमुपसम्पद्येत स कालः क्षणः, तत्प्रवाहाविच्छेदस्तु क्रमः, क्षणतत् क्रमयोर्नास्ति वस्तुसमाहार इति बुद्धिसमाहारो मुहूर्त्ताऽहोरात्रादयः, स खल्वयं कालो वस्तुशून्यो बुद्धिनिर्माणः शब्दज्ञानाऽनुपाती लौकिकानां व्युत्थितदर्श-

तृतीयोऽपि तैर्नोपनिमन्त्रणीयः भूतेन्द्रियवशित्वेनैव तत्प्राप्तेः, चतुर्थेऽपि पर-वैराग्यसम्पत्तेरासङ्गाऽशङ्का दूरोत्सारितैव, इति पारिशेष्याद् द्वितीय एव ऋत-म्भरप्रज्ञस्तदुपनिमन्त्रणविषय इति । वैहायसम् आकाशगामि, अक्षयम् अवि-नाशि, अजरं सदाऽभिनवम् । सङ्गकरणे दोषमाह स्मयादयम् इति, स्मयात् सुस्थितम्मन्यो नानित्यतां भावयिष्यति न तस्यां प्रणिधास्यतीत्यर्थः, सुगममन्यत् ॥ ५१ ॥

उक्ता क्वचित् क्वचित्संयमेऽसर्वज्ञता सा च न निःशेषज्ञता, अपि तु प्रकार-मात्रविवक्षया यथा सर्वैर्व्यञ्जनैर्भुक्तमिति, अत्र हि यावन्तो व्यञ्जनप्रकारास्तैर्भुक्त-मिति गम्यते न तु निःशेषैरिति, अस्ति च निःशेषवचनः सर्वशब्दः यथोपनीत-मन्नं सर्वमशितं प्राशकेनेति, तत्र हि निःशेषमिति, गम्यते, तदिह निःशेषज्ञता-लक्षणस्य विवेकजज्ञानस्य साधनं संयममाह सू० क्षण इत्यादि ॥ ५२ ॥ क्षण-पदार्थं निदर्शनपूर्वकमाह यथा इति, लोष्टस्य हि प्रविभज्यमानस्य यस्मिन्नवयवेऽल्पत्वतारतम्यं व्यवतिष्ठते सोऽपकर्षपर्य्यन्तः परमाणुर्यथा तथाऽपकर्षपर्य्यन्तः कालः क्षणः, पूर्वाऽपरभागविकलकालकलेति यावत् । तमेव क्षणं प्रकारान्तरेण दर्शयति यावता वा इति, परमाणुमात्रं देशमतिक्रामेदित्यर्थः । क्रमपदार्थमाह

नानां वस्तुस्वरूप इव अवभासते, क्षणस्तु वस्तुपतितः क्रमाऽवलम्बी, क्रमश्च क्षणाऽनन्तर्य्यात्मा, तं कालविदः काल इत्याचक्षते योगिनः। न च द्वौ क्षणौ सह भवतः, क्रमश्च न द्वयोः सहभुवोरसम्भवात्, पूर्वस्मादुत्तरभाविनो यदाऽनन्तर्य्यं क्षणस्य स क्रमः, तस्माद् वर्त्तमान एवैकः क्षणो न पूर्वोत्तरक्षणाः सन्तीति, तस्मान्नास्ति तत्समाहारः। ये तु भूतभाविनः क्षणास्ते परिणामाऽन्विता व्याख्येयाः, तेनैकेन क्षणेन कृत्स्नो लोकः परिणाममनुभवति, तत्क्षणोपारूढाः खलु अमी धर्माः. तयोः क्षणतत्क्रमयोः संयमात् तयोः साक्षात्करणं, ततश्च विवेकजं ज्ञानं प्रादुर्भवति ॥ ५२ ॥

तस्य विषयविशेष उपक्षिप्यते—

जातिलक्षणदेशैरन्यताऽनवच्छेदात्तुल्ययोस्ततः प्रतिपत्तिः ॥ ५३ ॥

तत्प्रवाह इति, तत् पदेन क्षणः परामृश्यते। न चेदृशः क्रमो वास्तवः किन्तु काल्पनिकः, तस्य समाहाररूपस्याऽयुगपदुपस्थितेषु वास्तवत्वेन विचाराऽसहत्वाद् इत्याह क्षणतत्क्रमयोः इति, अयुगपद्भाविक्षणधर्मत्वात् क्रमस्य क्षणसमाहारस्य अवास्तवत्वात् क्षणतत्क्रमयोरप्यवास्तवत्वं समाहारस्य। नैःसर्गिकवैकल्पिकबुद्ध्यतिशयरहिता लौकिकाः। प्रतिक्षणमेव व्युत्थितदर्शना भ्रान्ता ये कालमीदृशं वास्तवमभिमन्यन्त इति। तत्किं क्षणोऽपि अवास्तवः, नेत्याह क्षणस्तु इति, वस्तुपतितः वास्तव इत्यर्थः, क्रमस्याऽवलम्बनमवलम्बः सोऽस्याऽस्तीति, क्रमेण अवलम्ब्यते वैकल्पिकेनेत्यर्थः। क्रमस्य क्षणाऽवलम्बनत्वे हेतुमाह क्रमश्च इति, क्रमस्याऽवास्तवत्वे हेतुमाह न च इति, चो हेत्वर्थे। यस्तु वैजात्यात्सहभावमुपेयात्तं प्रत्याह क्रमश्च न द्वयोः इति, कस्मादसम्भव इत्यत आह पूर्वस्माद् इति, उपसंहरति तस्माद् इति। तत्किमिदानीं शशविषाणायमाना एव पूर्वोत्तरक्षणाः, नेत्याह ये तु इति, अन्विताः सामान्येन समन्वागता इत्यर्थः। उपसंहरति तेन इति, वर्त्तमानस्यैवाऽर्थक्रियासु स्तोचितासु सामर्थ्यादिति ॥ ५२ ॥

यद्यप्येतद्विवेकजं ज्ञानं निःशेषभावविषयमित्यग्रे वक्ष्यते तथाऽप्यतिसूक्ष्मत्वात्

तुल्ययोर्देशलक्षणसारूप्ये जातिभेदोऽन्यताया हेतुः, गौरियं वडवेयमिति । तुल्यदेशजातीयत्वे लक्षणमन्यत्वकरं, कालाक्षी गौः स्वस्तिमती गौरिति । द्वयोरामलकयोर्जातिलक्षणसारूप्याद् देशभेदोऽन्यत्वकर इदं पूर्वमिदमुत्तरमिति । यदा तु पूर्वमामलकमन्यव्यग्रस्य ज्ञातुरुत्तरदेश उपावर्त्यते तदा तुल्यदेशत्वे पूर्वमेतदुत्तरमेतदिति प्रविभागाऽनुपपत्तिः, असन्दिग्धेन च तत्त्वज्ञानेन भवितव्यम्, इत्यत इदमुक्तं ततः प्रतिपत्तिः, विवेकजज्ञानाद् इति । कथम्, पूर्वाऽमलकसहक्षणो देश उत्तरामलकसहक्षणदेशाद्भिन्नः ते चाऽमलके स्वदेशक्षणाऽनुभवभिन्ने, अन्यदेशक्षणाऽनुभवस्तु तयोरन्यत्वे हेतुरिति । एतेन दृष्टान्तेन परमाणोस्तुल्यजातिलक्षणदेशस्य

प्रथमं तस्य विषयविशेष उपक्षिप्यते सू० जाति इत्यादि ॥ ५३ ॥ लौकिकानां जातिभेदोऽन्यताया ज्ञापकहेतुः, तुल्या जातिर्गोत्वं तुल्यश्च देशः पूर्वत्वादिः कालाक्षी स्वस्तिमत्योर्लक्षणभेदः परमिति । द्वयोरामलकयोस्तुल्या आमलकत्वजातिः, वर्त्तुलादि लक्षणं तुल्यं, देशभेदः परमिति । यदा तु योगिज्ञानं जिज्ञासुना केनचित् पूर्वाऽमलकमन्यव्यग्रस्य योगिनो ज्ञातुरुत्तरदेश उपावर्त्यते उत्तरदेशमामलकं ततोऽपसार्य्य पिधाय वा तदा तुल्यदेशत्वे पूर्वमेतदुत्तरमेतदिति-प्रविभागाऽनुपपत्तिः प्राज्ञस्य लौकिकस्य प्रमाणनिपुणस्य, असन्दिग्धेन च तत्त्वज्ञानेन भवितव्यं, विवेकजज्ञानवतो योगिनः सन्दिग्धत्वानुपपत्तेः, अत उक्तं सूत्रकृता ततः प्रतिपत्तिः इति, तत इति व्याचष्टे विवेकजज्ञानाद् इति । अथ तत्क्रमसंयमाज्जातं ज्ञानं कथमामलकं तुल्यजातिलक्षणदेशादामलकान्तराद्विवेचयतीति पृच्छति कथम् इति, उत्तरमाह पूर्वामलकसहक्षणो देशः पूर्वामलकैकक्षणो देशः, तेन सह निरन्तरपरिणाम इति यावद्, उत्तरामलकसहक्षणाद् देशाद् उत्तरामलकनिरन्तरपरिणामाद् भिन्नः । भवतु देशयोर्भेदः किमायातमामलकभेदस्येत्यत आह ते चामलके स्वदेशक्षणाऽनुभवभिन्ने इति, स्वदेशसहितो यः क्षणः तस्याऽमलकस्य कालकला स्वदेशेन सहौत्तराधर्य्यरूपपरिणामलक्षिता सा स्वदेशक्षणः, तस्याऽनुभवः प्राप्तिर्वा ज्ञानं वा, तेन भिन्ने आमलके । ययोरामलकयोः पूर्वोत्तराभ्यां देशाभ्यामौत्तराऽधर्य्यपरिणामक्षण आसीत्तयोर्देशान्तरौत्तराऽधर्य्यपरिणामक्षणविशिष्टत्वमनुभवन् संयमी ते भिन्ने एव

वंपरमाणुदेशसहक्षणसाक्षात्करणादुत्तरस्य परमाणोस्तद्देशानुपपत्तावुत्तरस्य तद्देशाऽनुभवो भिन्नः सहक्षणभेदात्तयोरीश्वरस्य योगिनोऽन्यत्वप्रत्ययो भवतीति। अपरे तु वर्णयन्ति येऽन्त्या विशेषास्तेऽन्यताप्रत्ययं कुर्वन्तीति, तत्रापि देशलक्षणभेदो मूर्त्तिव्यवधिजातिभेदश्चान्यत्वहेतुः, क्षणभेदस्तु योगिबुद्धिगम्य एवेति, अत उक्तं "मूर्त्तिव्यवधिजातिभेदाभावान्नास्ति मूलपृथक्त्वम्" इति वार्षगण्यः ॥ ५३ ॥

**तारकं सर्वविषयं सर्वथा विषयमक्रमं चेति विवेकजं ज्ञानम् ॥ ५४ ॥**

प्रत्येति, सम्प्रति तद्देशपरिणामेऽपि पूर्वं भिन्नदेशपरिणामाद्विशिष्टस्य चैतद्देशपरिणामक्षणस्य संयमतः साक्षात्करणात्, तदिदमुक्तं अन्यदेशक्षणाऽनुभवस्तु तयोरन्यत्वे हेतुः इति। अनेनैव निदर्शनेन लौकिकपरीक्षकसंवादादिना परमाणोरपीदृशस्य भेदो योगीश्वरबुद्धिगम्यः श्रद्धेय इत्याह एतेन इति। अपरे तु वर्णयन्ति वर्णनमुदाहरति ये इति। वैशेषिका हि नित्यद्रव्यवृत्तयोऽन्त्या विशेषा इत्याहुः, तथाहि योगिनो मुक्तान् तुल्यजातिदेशकालान् व्यवधिरहितान् परस्परतो भेदेन प्रत्येकं तत्त्वेन प्रतिपद्यन्ते तस्मादस्ति कश्चिदन्त्यो विशेष इति, तथा च स एव नित्यानां परमाण्वादीनां द्रव्याणां भेदक इति। तदेतद् दूषयति तत्राऽपि इति, जातिदेशलक्षणानि उदाहृतानि. मूर्त्तिः संस्थानं, यथैकं विपुलाऽवयवसंस्थानोपपन्नमपसार्य्य तस्मिन्नेव देशेऽन्यद्व्ययस्य द्रष्टुः कुत्सिताऽवयवसन्निवेश उपावर्त्यते तदा तस्य संस्थानभेदेन भेदप्रत्ययः। शरीरं वा मूर्त्तिः, तत्सम्बन्धेनाऽऽत्मनां संसारिणां मुक्तात्मनां वा भूतपूर्वेण यादृशतादृशेन भेद, इति सर्वत्र भेदप्रत्ययस्याऽन्यथासिद्धेर्नान्त्यविशेषकल्पना, व्यवधिर्भेदकारणं यथा कुशपुष्करद्वीपयोर्देशस्वरूपयोरिति, यतो जातिदेशादिभेदा लोकबुद्धिगम्या अत उक्तं क्षणभेदस्तु योगिबुद्धिगम्य एव इति। एवकारः क्षणभेदमवधारयति न योगिबुद्धिगम्यत्वं, तेन भूतपूर्वेण देहसम्बन्धेन मुक्तात्मनामपि भेदो योगिबुद्धिगम्य उन्नेय इति, यस्य तूक्ता भेदहेतवो न सन्ति तस्य प्रधानस्य प्रभेदो नास्तीत्याचार्य्यो मेने, यथाहुः कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वाद् इति, तदाह मूर्त्तिव्यवधि इति। उक्तभेदहेतूपलक्षणमेतद्, जगन्मूलस्य प्रधानस्य पृथक्त्वं भेदो नास्तीत्यर्थः ॥ ५३ ॥

तारकमिति स्वप्रतिभोत्थमनौपदेशिकमित्यर्थः, सर्वविषयं नास्य किञ्चिदविषयीभूतमित्यर्थः, सर्वथा विषयम् अतीताऽनागतप्रत्युत्पन्नं सर्वं पर्य्यायैः सर्वथा जानातीत्यर्थः, अक्रममिति एकक्षणोपारूढं सर्वं सर्वथा गृह्णातीत्यर्थः, एतद्विवेकजं ज्ञानं परिपूर्णम्, अस्यैवांऽशो योगप्रदीपः, मधुमतीं भूमिमुपादाय यावदस्य परिसमाप्तिरिति॥ ५४॥

प्राप्तविवेकजज्ञानस्य अप्राप्तविवेकजज्ञानस्य वा—

## सत्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति॥५५॥

यदा निर्धूतरजस्तमोमलं बुद्धिसत्त्वं पुरुषस्याऽन्यताप्रत्ययमात्राधिकारं दग्धक्लेशबीजं भवति तदा पुरुषस्य शुद्धिसारूप्यमिवापन्नं भवति, तदा पुरुषस्योपचरितभोगाऽभावः

तदेवं विषयैकदेशं विवेकजज्ञानस्य दर्शयित्वा विवेकजं ज्ञानं लक्षयति सू० तारकम् इत्यादि। ५४॥ विवेकजं ज्ञानमितिलक्ष्यनिर्देशः, शेषं लक्षणम्, संसारसागरात्तारयतीति तारकं, पूर्वस्मात् प्रातिभाद्विशिनष्टि सर्वथा विषयम् इति। पर्य्यायाः अवान्तरविशेषाः, अतएव विवेकजं ज्ञानं परिपूर्णं नाऽस्य कश्चित्किञ्चित्कथञ्चित्कदाचिदगोचर इत्यर्थः। आस्तां तावत् ज्ञानान्तरं सम्प्रज्ञातोऽपि तावदस्यांऽशः, तस्मादतः परं किम्परिपूर्णमित्याह अस्यैवांशो योगप्रदीप इति, योगप्रदीपः सम्प्रज्ञातः। किमुपक्रमः किमवसानश्चासावित्याह मधुमतीम् इति, ऋतम्भरा प्रज्ञैव मधु, मोदकारणत्वाद्, यथोक्तं प्रज्ञाप्रसादमारुह्य इति, तद्वती मधुमती तामुपादाय, यावदस्य परिसमाप्तिः सप्तधा प्रान्तभूमिः प्रज्ञा, अत एव विवेकजं ज्ञानं तारकं भवति तदंशस्य योगप्रदीपस्य तारकत्वादिति। ५४॥

तदेवम्परम्परया कैवल्यस्य हेतून् सविभूतीन् संयमानुक्त्वा सत्वपुरुषाऽन्यताज्ञानं साक्षात्कैवल्यसाधनमित्यत्र सूत्रमवतारयति प्राप्त इति, विवेकजं ज्ञानं भवतु मा वा भूत् सत्वपुरुषाऽन्यताख्यातिस्तु कैवल्यप्रयोजिकेत्यर्थः। सू० सत्व इत्यादि॥ ५५॥ इति: सूत्रसमाप्तौ। ईश्वरस्य पूर्वोक्तैः संयमैर्ज्ञानक्रियाशक्तिमतः, अनीश्वरस्य वा समनन्तरोक्तेन संयमेन विवेकजज्ञानभागिनः, इतरस्य वाऽशु-

शुद्धिः, एतस्यामवस्थायां कैवल्यं भवतीश्वरस्यानीश्वरस्य वा विवेकजज्ञानभागिन इतरस्य वा, न हि दग्धक्लेशबीजस्य ज्ञाने पुनरपेक्षा काचिदस्ति, सत्त्वशुद्धिद्वारेणैतत्समाधिजमैश्वर्यं च ज्ञानञ्चोपक्रान्तम्, परमार्थतस्तु ज्ञानाददर्शनं निवर्त्तते तस्मिन्निवृत्ते न सन्त्युत्तरे क्लेशाः, क्लेशाऽभावात्कर्मविपाकाऽभावः, चरिताऽधिकाराश्चैतस्यामवस्थायां गुणा न पुरुषस्य पुनर्दृश्यत्वेनोपतिष्ठन्ते, तत्पुरुषस्य कैवल्यं, तदा पुरुषः स्वरूपमात्रज्योतिरमलः केवली भवति ॥ ५५ ॥

इति पातञ्जलभाष्यप्रवचने विभूतिपादस्तृतीयः।

---

## कैवल्यपादः।

### जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ॥१॥

प्रज्ञानस्य, न विभूतिषु काचिदपेक्षाऽस्तीत्याह न हि इति, ननु यद्यनपेक्षिता विभूतयः कैवल्ये व्यर्थस्तर्हि तासामुपदेश इत्यत आह सत्त्वशुद्धिद्वारेण इति, इत्थम्भूतलक्षणे तृतीया, नात्यन्तमहेतवः कैवल्ये विभूतयः किन्तु न साक्षादित्यर्थः। ज्ञानं विवेकजमुपक्रान्तं यत्र पारम्पर्येण कारणं तदौपचारिकं न मुख्यं परमार्थतस्तु ख्यातिरेव मुख्येत्यर्थः ज्ञानादिति प्रसङ्ख्यानादित्यर्थः।

अत्राऽन्तरङ्गाण्यङ्गानि परिणामाः प्रपञ्चिताः।
संयमाद् भूतिसंयोगस्तासु ज्ञानं विवेकजम् ॥

इति पदार्थसंग्रहः श्लोकः ॥ ५५ ॥

इति श्रीमद्वाचस्पतिमिश्रविरचितायां पातञ्जलभाष्यव्याख्यायां तत्त्ववैशारद्यां विभूतिपादस्तृतीयः समाप्तः।

---

तदेवं प्रथमद्वितीयतृतीयपादैः समाधितत्साधनतद्विभूतयः प्राधान्येन व्युत्पादिताः, इतरत्तु प्रासङ्गिकमौपोद्घातिकं चोक्तं, इदानीं तद्धेतुकं कैवल्यं व्युत्पादनीयं, न चैतत्कैवल्यभागीयं चित्तं परलोकं च पारलौकिकं विज्ञानाऽतिरिक्तं

देहान्तरिता जन्मना सिद्धिः, ओषधिभिः असुरभवनेषु रसायनेनेत्येवमादि, मन्त्रैः आकाशगमनाऽणिमादिलाभः, तपसा सङ्कल्पसिद्धिः, कामरूपी यत्र तत्र कामग इत्येवमादि, समाधिजाः सिद्धयो व्याख्याताः ॥ १ ॥

तत्र कायेन्द्रियाणामन्यजातीयपरिणतानाम्—

जात्यन्तरपरिणामः प्रकृत्याऽपूरात् ॥ २ ॥

पूर्वपरिणामापाय उत्तरपरिणामोपजनस्तेषामपूर्वाऽवय-

चित्तकरणकसुखाद्यात्मकशब्दाद्युपभोक्तारमात्मानं च प्रसङ्ख्यानपरमकाष्ठां च विना व्युत्पाद्य शक्यं वक्तुम् इति तदेतत्सर्वं अत्रपादे व्युत्पादनीयम्, इतरच्च प्रसङ्गादुपोद्घातादा, तत्र प्रथमं सिद्धचित्तेषु कैवल्यभागीयं चित्तं निर्धारयितुकामः पञ्चतयीं सिद्धिमाह जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ॥ १ ॥ व्याचष्टे देहान्तरिता इति, स्वर्गोपभोगभागीयात्कर्मणो मनुष्यजातीयाऽचरितात्कुतश्चिन्निमित्ताल्लब्धपरिपाकात्कश्चिद् देवनिकाये जातमात्रस्यैव दिव्यदेहान्तरिता सिद्धिरणिमाद्या भवतीति । ओषधिसिद्धिमाह असुरभवनेषु इति । मनुष्यो हि कुतश्चिन्निमित्तादसुरभवनमुपसम्प्राप्तः कमनीयाभिरसुरकन्याभिरुपनीतं रसायनमुपयुज्याऽजराऽमरणत्वमन्याश्च सिद्धीरासादयति, इहैव वा रसायनोपयोगेन, यथा माण्डव्यो मुनिः रसोपयोगाद्विन्ध्यवासी इति । मन्त्रसिद्धिमाह मन्त्रैः इति, तपःसिद्धिमाह तपसा इति, सङ्कल्पसिद्धिमाह कामरूपी इति, यदेव कामयतेऽणिमादि तदेकपदेऽस्य भवतीति, यत्र कामयते श्रोतुं वा मन्तुं वा तत्र तदेव शृणोति मनुते चेति, आदिशब्दात् दर्शनादयः संगृहीता इति, समाधिजाः सिद्धयो व्याख्याताः अधस्तने पादे ॥ १ ॥

अथ एतासु सिद्धिषु औषधादिसाधनासु तेषामेव कायेन्द्रियाणां जात्यन्तरपरिणतिरिष्यते, सा पुनर्न तावदुपादानमात्रात्, न हि तावन्मात्रमुपादानं न्यूनाऽधिकाद्दिव्याऽदिव्यभावेऽस्य भवति, नो खल्वविलक्षणं कारणं कार्यवैलक्षण्याय क्षमम्, माऽस्याऽकस्मिकत्वं भूदित्याशङ्क्य पूरयित्वा सूत्रं पठति तत्र कायेन्द्रियाणामन्यजातीयपरिणतानां जात्यन्तरपरिणामः प्रकृत्याऽपूरात् ॥ २ ॥ मनुष्यजातिपरिणतानां कायेन्द्रियाणां यो देवतिर्यग्जातिपरिणामः स खलु प्रकृत्याऽपूरात्, कायस्य हि प्रकृतिः पृथिव्यादीनि भूतानि, इन्द्रियाणां च प्रकृतिरस्मिता, तदवय-

शाऽनुप्रवेशाद् भवति, कायेन्द्रियप्रकृतयश्च स्वं स्वं विकारमनुगृह्णन्ति आपूरेण धर्मादिनिमित्तमपेक्षमाणा इति ॥ २ ॥

निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् ॥ ३ ॥

न हि धर्मादिनिमित्तं प्रयोजकं प्रकृतीनां भवति, न कार्य्येण कारणं प्रवर्त्त्यत इति, कथन्तर्हि, वरणभेदस्तु ततः क्षेत्रिकवद् यथा क्षेत्रिकः केदारादपां पूरणात् केदारान्तरं पिप्लावयिषुः समं निम्नं निम्नतरं वा नाऽपः पाणिना अपकर्षति आवरणं तु आसां भिनत्ति, तस्मिन् भिन्ने स्वमेव आपः केदारान्तरमाप्लावयन्ति तथा धर्मः प्रकृतीनामावरणमधर्मं भिनत्ति तस्मिन् भिन्ने स्वयमेव प्रकृतयः स्वं स्वं विकारमाप्लावयन्ति, यथा वा स एव क्षेत्रिकः तस्मिन्नेव केदारे न प्रभवति औदकान् भौमान् वा रसान् धान्यमूलानि अनुप्रवेशयितुं किन्तर्हि मुद्गगवेधुकश्यामाकादीन् ततोऽपकर्षति, अपकृष्टेषु तेषु स्वय-

वाऽनुप्रवेश आपूरः, तस्माद् भवति, तदिदमाह पूर्वपरिणाम इति, ननु यदि आपूरेणाऽनुग्रहः कस्मात् नरसौ न सदातन इत्यत आह धर्मादि इति, तदनेन तस्यैव शरीरस्य बाल्यकौमारयौवनवार्द्धकादीनि च, न्यग्रोधधानाया न्यग्रोधतरुभावश्च, वह्निकणिकायास्तृणराशिनिवेशितायाः प्रोद्भवज्ज्वालासहस्रसमालिङ्गितगगनमण्डलत्वं च व्याख्यातम् ॥ २ ॥

प्रकृत्याऽपूरादित्युक्तं, तत्रेदं सन्दिह्यते, किमापूरः प्रकृतीनां स्वाभाविकः, धर्मादिनिमित्तो वेति, किं प्राप्तं, सतीष्वपि प्रकृतिषु कदाचिदाऽपूराद् धर्मादिनिमित्तश्रवणाच्च तन्निमित्त एवेति प्राप्तम्, एवम्प्राप्त आह सू० निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवद् ॥ ३ ॥ सत्यं धर्मादयो निमित्तं, न तु प्रयोजकाः, तेषामपि प्रकृतिकार्य्यत्वाद्, न च कार्य्यं कारणं प्रयोजयति, तस्य तदधीनोत्पत्तितया कारणपरतन्त्रत्वात्, स्वतन्त्रस्य च प्रयोजकत्वात्, न खलु कुलालमन्तरेण मृद्दण्डचक्रसलिलादय उत्पित्सितेऽपि घटेन प्रभवन्ते,

मेव रसा धान्यमूलानि अनुप्रविशन्ति, तथा धर्मो निवृत्तिमात्रे कारणमधर्मस्य, शुद्धाशुद्धयोरत्यन्तविरोधात्, न तु प्रकृतिप्रवृत्तौ धर्मो हेतुर्भवतीति । अत्र नन्दीश्वरादय उदाहार्य्याः, विपर्य्ययेणाऽप्यधर्मो धर्मं बाधते, ततश्चाऽशुद्धिपरिणाम इति, तत्राऽपि नहुषाऽजगरादय उदाहार्य्याः ॥ ३ ॥

यदा तु योगी बहून् कायान् निर्मिमीते तदा किमेकमनस्कास्ते भवन्ति अथ अनेकमनस्का इति,—

## निर्माणचित्तान्यस्मितामात्रात् ॥ ४ ॥

अस्मितामात्रं चित्तकारणमुपादाय निर्माणचित्तानि करोति, ततः सचित्तानि भवन्ति ॥ ४ ॥

## प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् ॥५॥

बहूनां चित्तानां कथमेकचित्ताऽभिप्रायपुरःसरा प्रवृत्ति-

किन्तु क्षत्रस्येव कुलालेन, न च पुरुषार्थोऽपि प्रवर्त्तकः, किन्तु तदुद्देश्यत्वेश्वरः, उद्देश्यतामात्रेण पुरुषार्थः प्रवर्त्तक इत्युच्यते, उत्पित्सोस्तस्य पुरुषार्थस्य अव्यक्तस्य स्थितिकारणत्वं युक्तं, न चैतावता धर्मादीनामनिमित्तता, प्रतिबन्धापनयनमात्रेण क्षेत्रिकवदुपपत्तेः, ईश्वरस्याऽपि धर्माऽधिष्ठानार्थं प्रतिबन्धापनय एव व्यापारो वेदितव्यः, तदेतन्निगदव्याख्यातेन भाष्येण व्यक्तम् ॥ ३ ॥

प्रकृत्यापूरेण सिद्धौ समर्थं सिद्धिविनिर्मितनानाकायवर्त्तिचित्तैकत्वनानात्वे विचारयति यदा तु इति, तत्र नानामनस्त्वे कायानां प्रतिचित्तमभिप्रायभेदात् एकाभिप्रायानुरोधश्च परस्परं प्रतिसन्धानं च न स्यातां पुरुषान्तरवत्, तस्मादेकमेव चित्तं प्रदीपवद्विस्तारितया बहूनपि निर्माणकायान् व्याप्नोतीति प्राप्त आह निर्माणचित्तान्यस्मितामात्रात् ॥ ४ ॥ यद् यावज्जीवच्छरीरं तत्सर्वमेकैकासाधारणचित्तान्वितं दृष्टं, यथा चैत्रमैत्रादिशरीरं, तथा च निर्माणकायाः, इति सिद्धं तेषामपि प्रातिस्विकं मन, इत्यभिप्रायेण आह अस्मितामात्रम् इति ॥४॥

यदुक्तमनेकचित्तत्व एकाभिप्रायानुरोधश्च प्रतिसन्धानं च न स्यातामिति, अत्रोत्तरं सूत्रम् प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् ॥ ५ ॥ अभिप्रायदेव

इति सर्वचित्तानां प्रयोजकं चित्तमेकं निर्मिमीते, ततः प्रवृत्तिभेदः ॥ ५ ॥

**तत्र ध्यानजमनाशयम् ॥ ६ ॥**

पञ्चविधं निर्माणचित्तं जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धय इति, तत्र यदेव ध्यानजं चित्तं तदेव अनाशयं तस्यैव नास्ति आशयो रागादिप्रवृत्तिर्नातः पुण्यपापाभिसम्बन्धः, क्षीणक्लेशत्वाद् योगिन इति, इतरेषान्तु विद्यते कर्माशयः ॥ ६ ॥

यतः—

**कर्माऽशुक्लाऽकृष्णं योगिनस्त्रिविधमितरेषाम् ॥ ७ ॥**

चतुष्पात् खलु इयं कर्मजातिः, कृष्णा, शुक्लकृष्णा, शुक्ला,

टीका यदि चित्तमेकं नानाकायवर्त्ति मनोनायकं न निरमास्यत, तन्निर्माणे न घटेत । अथैकं गृहीत्वा कृतं प्रातिस्विकैर्मनोभिः, कृतं वा नायकनिर्माणेन, निजस्यैव मनसो नायकत्वादिति वाच्यम् । प्रमाणसिद्धस्य नियोगपर्य्यनुयोगाऽनुपपत्तेरिति । अत्र पुराणं भवति "एकस्तु प्रभुशक्त्या वै बहुधा भवतीश्वरः । भूत्वा यस्मात्तु बहुधा भवत्येकः पुनस्ततः । तस्माच्च मनसो भेदा जायन्ते चैत एवहि । एकधा स द्विधा चैव त्रिधा च बहुधा पुनः । योगीश्वरः शरीराणि करोति विकरोति च । प्राप्नुयाद्विषयान् कैश्चित् कैश्चिदुग्रं तपश्चरेत् । संहरेच्च पुनस्तानि सूर्य्यो रश्मिगणानिव" इति । तदेतेन अभिप्रायेण आह बहूनां चित्तानाम् इति ॥५॥

तदेवमुदितेषु पञ्चसु सिद्धचित्तेषु अपवर्गभागीयं चित्तं निर्धारयति तत्र ध्यानजमनाशयम् ॥ ६ ॥ आशेरत इति आशयाः कर्मवासनाः क्लेशवासनाश्च त एते न विद्यन्ते यस्मिन् तदनाशयं चित्तमपवर्गभागीयं भवति इत्यर्थः । यतो रागादिनिबन्धना प्रवृत्तिर्नास्ति अतो नास्ति पुण्यपापाभिसम्बन्धः । कस्मात् पुनः रागादिजनिता प्रवृत्तिर्नास्तीत्यत आह क्षीणक्लेशत्वाद् इति । ध्यानजस्यानाशयस्य मनोऽन्येभ्यो विशेषं दर्शयितुमितरेषामाशयवत्तामाह इतरेषान्तु इति ॥६॥

तत्रैव च हेतुपरं सूत्रमवतारयति यत इति, सू० कर्माऽशुक्लाऽकृष्णं योगिनस्त्रिविधमितरेषाम् ॥ ७ ॥ पदं स्थानं, चतुर्षु समवेता चतुष्पदा, यद् यावद्

अशुक्लाऽकृष्णा चेति, तत्र कृष्णा दुरात्मनां, शुक्लकृष्णा बहिः साधनसाध्या, तत्र परपीडानुग्रहद्वारेण कर्माशयप्रचयः, शुक्ला तपःस्वाध्यायध्यानवतां, सा हि केवले मनसि आयतत्वाद्-बहिः साधनाधीनानपरान् पीडयित्वा भवति, अशुक्ला-ऽकृष्णा संन्यासिनां क्षीणक्लेशानां चरमदेहानामिति। तत्रा-ऽशुक्लं योगिन एव फलसंन्यासाद् अकृष्णं चाऽनुपादानाद्, इतरेषां तु भूतानां पूर्वमेव त्रिविधमिति ॥ ७ ॥

ततस्तद्विपाकानुगुणानामेवाऽभिव्यक्तिर्वासना-नाम् ॥ ८ ॥

तत इति त्रिविधात् कर्मणः, तद्विपाकानुगुणानामेवेति यज्जातीयस्य कर्मणो यो विपाकस्तस्यानुगुणा या वासनाः कर्मविपाकमनुशेरते तासामेवाभिव्यक्तिः, न हि दैवं कर्म विपच्यमानं नारकतिर्यङ्मनुष्यवासनाभिव्यक्तिनिमित्तं भवति,

बहिःसाधनसाध्यं तत्र सर्वत्राऽस्ति कस्यचित्पीडा, न हि ब्रीह्यादिसाधनेऽपि कर्मणि परपीडा नास्ति, अवघातादिसमये पिपीलिकादिवधसम्भवाद्, अन्ततो बीजादिवधेन सम्भाविभविष्यदङ्कुरोत्पत्तिप्रतिबन्धाद्, अनुग्रहश्च दक्षिणादिना ब्राह्मणादे-रिति। शुक्ला तपःस्वाध्यायध्यानवतामसंन्यासिनां, शुक्लत्वमुपपादयति सा हि इति, अशुक्लाऽकृष्णा संन्यासिनां संन्यासिनो दर्शयति क्षीण इति, कर्मसंन्यासिनो हि न क्वचिद् बहिःसाधनसाध्ये कर्मणि प्रवृत्ता इति न चैषामस्ति कृष्णः कर्मा-शयः, योगानुष्ठानसाध्यस्य कर्माशयफलस्येश्वरे समर्पणान्न शुक्लः कर्माशयः, निर-त्ययफलो हि शुक्ल उच्यते यस्य फलमेव नास्ति कुतस्तस्य निरत्ययफलमित्यर्थः। तदेवं चतुष्टयीं कर्मजातिमुक्त्वा कतमा कस्येत्यवधारयति तत्राऽशुक्लम् इति ॥ ७ ॥

कर्माशयं विविच्य क्लेशाशयगतिमाह ततस्तद्विपाकानुगुणानामेवाऽभिव्यक्ति-र्वासनानाम् ॥ ८ ॥ यज्जातीयस्य पुण्यजातीयस्य अपुण्यजातीयस्य वा, कर्मणो यो विपाकः दिव्यो वा नारको वा जात्यायुर्भोगः, तस्य विपाकस्यानुगुणाः। ता एवाऽऽह या वासना कर्मविपाकमनुशेरते इति, अनुशेरते अनुकुर्वन्ति, दिव्यभोग-

किन्तु देवानुगुणा एव अस्य वासना व्यज्यन्ते, नारकतिर्य्यङ्मनुष्येषु चैवं समानश्चर्चः ॥ ८ ॥

**जातिदेशकालव्यवहितानामप्यानन्तर्य्यं स्मृतिसंस्कारयोरेकरूपत्वाद् ॥ ९ ॥**

वृषदंशविपाकोदयः स्वव्यञ्जकाञ्जनाभिव्यक्तः स यदि जातिशतेन वा दूरदेशतया वा कल्पशतेन वा व्यवहितः पुनश्च स्वव्यञ्जकाञ्जन एव उदियाद् द्रागित्येव पूर्वानुभूतवृषदंशविपाकाभिसंस्कृता वासना उपादाय व्यज्येत, कस्माद्, यतो व्यवहितानामपि आसां सदृशं कर्माभिव्यञ्जकं निमित्तीभूतमिति आनन्तर्य्यमेव, कुतश्च, स्मृतिसंस्कारयोः एकरूपत्वाद्, यथानुभवास्तथा संस्काराः, ते च कर्मवासनानुरूपाः, यथा च

जनिता हि दिव्यकर्मविपाकानुगुणा वासनाः, न हि मनुष्यभोगवासनाभिव्यक्तौ दिव्यकर्मफलोपभोगसम्भवः, तस्मात् स्वविपाकानुगुणा एव वासनाः कर्माभिव्यञ्जनीया इति भाष्यार्थः ॥ ८ ॥

स्यादेतद्, मनुष्यस्य प्रायणाऽनन्तरमधिगतमार्जारभावस्याऽनन्तरतया मनुष्यवासनाया एवाऽभिव्यक्त्या भवितव्यं, न खलु अस्ति सम्भवो यदनन्तरदिवसाऽनुभूतं न स्मर्यते व्यवहितदिवसाऽनुभूतं च स्मर्यत इत्यत आह जातिदेशकालव्यवहितानामप्यानन्तर्य्यं स्मृतिसंस्कारयोरेकरूपत्वाद् ॥ ९ ॥ भवतु वृषदंशवासनाया जात्यादिव्यवधिस्तथाऽपि तस्याः फलत आनन्तर्य्यं, वृषदंशविपाकेन कर्मणा तस्या एव स्वविपाकाऽनुगुणाया अभिव्यक्तौ तत्स्मरणसमुत्पादाद् इत्याह वृषदंशविपाकोदय इति, उदेत्यस्मादित्युदयः कर्माशयः, पुनश्च स्वव्यञ्जकाञ्जन एवोदियाद् अभिव्यज्येत विपाकारम्भाऽभिमुखः क्रियेतेत्यर्थः। अभिसंस्कारः क्रिया, उपादाय गृहीत्वा, व्यज्येत, यदि व्यज्येत स्वविपाकाऽनुगुणा एव वासना गृहीत्वा व्यज्यतेत्यर्थः, आनन्तर्य्यमेव फलतः कारणद्वारकमुपपाद्य कार्य्यद्वारकमुपपादयति कुतश्च स्मृति इति, एकरूपतया सादृश्यं, तदेवाऽऽह यथा इति, ननु अनुभवस्वरूपा एव संस्कारास्तथा सत्यनुभवा विनश्वरा एव इत्येतेऽपि विनश्वरा एव: कथं चिरभाविनेऽनुभवाय कल्पेरन्नित्यत आह ते च कर्मवासनानुरूपा इति। यथा अपूर्वं स्वावि

वासनाः तथा स्मृतिः, इति जातिदेशकालव्यवहितेभ्यः संस्कारेभ्यः स्मृतिः, स्मृतेश्च पुनः संस्कारा, इत्येते स्मृतिसंस्काराः कर्माशयवृत्तिलाभवशात् व्यज्यन्ते, अतश्च व्यवहितानामपि निमित्तनैमित्तिकभावानुच्छेदादानन्तर्य्यमेव सिद्धमिति ॥९॥

तासामनादित्वं च आशिषो नित्यत्वात् ॥१०॥

तासां वासनानामाशिषो नित्यत्वादनादित्वं, येयमात्माऽऽशीर्मा न भूवं भूयासमिति सर्वस्य दृश्यते सा न स्वाभाविकी, कस्मात्, जातमात्रस्य जन्तोरननुभूतमरणधर्मकस्य द्वेषदुःखाऽनुस्मृतिनिमित्तो मरणत्रासः कथं भवेत्, न च स्वाभाविकं

क्षणिककर्मनिमित्तमपि एवं क्षणिकाऽनुभवनिमित्तोऽपि संस्कारः स्थायी, किञ्चिद्भेदाऽधिष्ठानं च सारूप्यम् अन्यथा अभेदे तत्वेन सादृश्याऽनुपपत्तेरित्यर्थः । सुगममन्यत् ॥ ९ ॥

स्यादेतत्, व्यज्येरन् पूर्वपूर्वतरजन्माभिसंस्कृता वासना यदि पूर्वपूर्वतरजन्मसद्भावे प्रमाणं स्यात्, तदेव तु नास्ति, न च जातमात्रस्य जन्तोर्हर्षशोकादिदर्शनमात्रं प्रमाणं भवितुमर्हति, पद्मादिसङ्कोचविकाशवत् स्वाभाविकत्वेनाप्युपपत्तेरित्यत आह तासामनादित्वं चाऽऽशिषो नित्यत्वात् ॥ १० ॥ तासां वासनानामनादित्वं च न केवलमानन्तर्य्यमिति चाऽर्थः, आशिषो नित्यत्वात् आत्माशिषो वासनानामनादित्वेन नित्यत्वाऽव्यभिचारादिति । ननु स्वाभाविकत्वेनाऽप्युपपत्तेरसिद्धमाशिषो नित्यत्वमित्यत आह येयम् इति, नास्तिकः पृच्छति कस्मादिति, उत्तरं जातमात्रस्य जन्तोः इति, अत एवैतस्मिन् जन्मनि अननुभूतमरणधर्मकस्य मरणमेव धर्मः सोऽननुभूतो येन स तथोक्तः तस्य, मातुरङ्कात् प्रस्खलतः कम्पमानस्य माङ्गल्यसूत्रादिलाञ्छितं तदुरः सूत्रमतिगाढं पाणिनाऽवलम्बमानस्य बालकस्य कम्पभेदाऽनुमिता द्वेषाऽनुषक्ते दुःखे या स्मृतिस्तन्निमित्तो मरणत्रासः कथं भवेदिति । ननूक्तं स्वभावादित्यत आह न च इति न च स्वाभाविकं वस्तु निमित्तमुपादत्ते गृह्णाति स्वोत्पत्तौ, एतदुक्तं भवति बालकस्येदृशो दृश्यमानो कम्पो भयनिबन्धनः ईदृशकम्पत्वात् अस्मदादिकम्पवत्, बालकस्य भयं द्वेषदुःखस्मृतिनिमित्तं भयत्वादस्मदादिभयवत् आगामिप्रत्यवायोत्प्रेक्षालक्षणं च भयं न दुःखस्मृतिमात्राद् भवति अपि तु यतो बिभेति तस्य प्रत्यवायहेतुभावमनुमाय

वस्तु निमित्तमुपादत्ते, तस्मादनादिवासनानुविद्धमिदं चित्तं निमित्तवशात्काचिदेव वासना प्रतिलभ्य पुरुषस्य भोगाय उपावर्त्तत इति। घटप्रासादप्रदीपकल्पं सङ्कोचविकाशि चित्तं शरीरपरिमाणाकारमात्रमित्यपरे प्रतिपन्नाः, तथाचान्तराभावः, संसारश्च युक्त इति। वृत्तिरेवास्य विभुनः सङ्कोचविकाशिनीत्याचार्य्यः। तच्च धर्मादिनिमित्तापेक्षं, निमित्तं च द्विविधं बाह्यमाध्यात्मिकं च, शरीरादिसाधनाऽपेक्षं बाह्यं स्तुतिदानाऽभिवादनादि, चित्तमात्राधीनं श्रद्धाद्याध्या-

सम्प्रत्यपि प्रत्यवायभयं विदध्यादिति शङ्कते, तस्माद् यज्जातीयादनुभूतचराद् देहा- ऽनुषक्तं दुःखमुपपादितं तस्य स्मरणात्तज्जातीयस्य अनुभूयमानस्य तद्दुःखहेतुत्व- मनुमाय ततो बिभेति न च बालकेन अस्मिन् जन्मनि शास्त्रजातस्याऽन्यत्र दुःखहेतुत्व- मवगतं, न च तादृशं दुःखमुपलब्धं, तस्मात् प्राग्भवीयोऽनुभवः परिशिष्यते, तदेत- देवं प्रयोगमारोहति जातमात्रस्य बालकस्य स्मृतिः पूर्वाऽनुभवनिबन्धना स्मृति- त्वादस्मदादिस्मृतिवदिति, न च पद्मसङ्कोचविकाशावपि स्वाभाविकौ, न हि स्वाभाविकं कारणान्तरमपेक्षते, वहरीणां प्रत्यपि कारणान्तराऽपेक्षाप्रसङ्गात्, तस्मादागन्तुकमरुणकरसम्पर्कमात्रमेव कमलिनीविकाशकारणं, सङ्कोचकारणं च संस्कारः स्थितिस्थापक इति। एवं स्मिताद्यनुमितहर्षादयोऽपि प्राचि भवे हेतवो वेदितव्याः, तदास्तां तावत्, प्रकृतमुपसंहरति तस्माद् इति, निमित्तम् लब्धविपाक- काले कर्म, प्रतिलम्भः अभिव्यक्तिः। प्रसङ्गतश्चित्तपरिमाणविप्रतिपत्तिं निरा- चिकीर्षुर्विप्रतिपत्तिमाह घटप्रासाद इति। देहप्रदेशवर्त्ति कार्यदर्शनाद् देहा- द्बहिःसद्भावे चित्तस्य न प्रमाणमस्ति नचैतदणुपरिमाणं, दीर्घशष्कुलीभक्षणादाव- पर्यायेण ज्ञानपञ्चकाऽनुत्पादप्रसङ्गाद्, नचाऽननुभूयमानक्रमकल्पनायां प्रमाण- मस्ति, नचैकमणु मनो नानादेशैरिन्द्रियैरपर्यायेण सम्बन्धुमर्हति, तत्पारिशेष्यात् कायपरिमाणं चित्तं, घटप्रासादवर्त्ति प्रदीपवत् सङ्कोचविकाशी पुत्तिकाहस्ति- देहयोरस्योत्पश्यते, शरीरपरिमाणमेवाकारः परिमाणं यस्येत्यपरे प्रतिपन्नाः। नन्वेवं कथमस्य चैववीजसंयोगः, न खलु एतदनाश्रयं मृतशरीरान्मातापितृदेह- वर्त्तिनी लोहितरेतसी प्राप्नोति, परतन्त्रत्वाद्, न हि स्थाण्वादिषु अगच्छत्सु तच्छाया गच्छति, नचाऽगच्छति पटे तदाश्रयं चित्रं गच्छति, तथा च न संसारः स्यादि- त्यत आह तथा चान्तराभावः संसारश्च युक्त इति, तथाच शरीरपरिमाणत्वे, देहान्तरप्राप्तये पूर्वदेहत्यागश्च देहान्तरप्राप्तिश्चाऽन्तराऽस्याऽतिवाहिकशरीरसंयो-

**त्मिकं, तथा चोक्तं "ये चैते मैत्र्यादयो ध्यायिनां विहारास्ते बाह्यसाधननिरनुग्रहात्मानः प्रकृष्टं धर्ममभिनिर्वर्त्तयन्ति तयोर्मानसं बलीयः, कथं, ज्ञानवैराग्ये केनातिशय्येते, दण्डकारण्यं चित्तबलव्यतिरेकेण कः शारीरेण कर्मणा शून्यं कर्त्तुमुत्सहेत, समुद्रमगस्त्यवद्वा पिबेद् ॥ १० ॥**

माद् भवतः, तेन खलु अयं देहान्तरे सञ्चरेत्, तथा च पुराणम् अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलाद् इति, सोऽयमन्तराभावः, अत एव संसारश्च युक्त इति । तदेतदमृष्यमाणः स्वमतमाह वृत्तिः इति, वृत्तिरेवाऽस्य विभुनश्चित्तस्य सङ्कोचविकासिनीत्याचार्य्यः स्वयम्भूः प्रतिपेदे । इदमत्र आकूतं, यदनाश्रयं चित्तं न देहान्तरसञ्चारि कथमेतदातिवाहिकमाश्रयते, तत्राऽपि देहान्तरकल्पनायामनवस्था, न चाऽस्य देहान्निष्कर्षं आतिवाहिकस्य सम्भवति, निष्कृष्टस्य चेतसस्तत्सम्बन्धात्. अस्तु तर्हि सूक्ष्मशरीरमेव आसर्गाद् आ च महाप्रलयान्नियतं चित्तानामधिष्ठानं षाट्कौशिकशरीरमध्यवर्त्ति, तेन हि चित्तमा सत्यलोकादाऽऽवीचेस्तत्र तत्र शरीरे सञ्चरति, निष्कर्षश्चास्योपपन्नः षाट्कौशिककायात्, तत्र हि तदन्तराभावस्तस्य नियतत्वात्, नचाऽस्याऽपि सद्भावे प्रमाणमस्ति न खलु एतदध्यक्षगोचरः, न च संसारोऽस्याऽनुमानम्. आचार्य्यमतेनाऽप्युपपत्तेः, आगमस्तु पुरुषस्य निष्कर्षमाह, न च चित्तं वा सूक्ष्मशरीरं वा पुरुषः, किन्तु चितिशक्तिरप्रतिसंक्रमा, न चास्या निष्कर्षः सम्भवति, इत्यौपचारिको व्याख्येयः, तथाच चितेश्चित्तस्य च तत्र तत्र वृत्त्यभाव एव निष्कर्षार्थः, यत्तु श्रुतीतिहासपुराणेषु मरणानन्तरं प्रेतशरीरप्राप्तिः तद्विमोकश्च सपिण्डीकरणादिभिः इत्युक्तं तदनुजानीमः, आतिवाहिकत्वं तस्य न मृष्यामहे, नचाऽत्राऽस्ति कश्चिदागमः अश्मशरीर एव च यमपुरुषैरपि पाशबद्धो नीयेत न तु आतिवाहिकशरीरः, तस्मादाहङ्कारिकत्वाच्चेतसोऽहङ्कारस्य गगनमण्डलवत् त्रैलोक्यव्यापित्वाद्विभुत्वं मनसः एवं चेदस्य वृत्तिरपि विभ्वीति सर्वज्ञतापत्तिरित्यत उक्तं वृत्तिरेवाऽस्य इति, स्यादेतत्, चित्तमात्राऽधीनाया वृत्तेः सङ्कोचविकासौ कुतः कादाचित्काविश्यत आह तच्च इति, तच्च चित्तं धर्माद्यपेक्षं वृत्तौ । निमित्तं विभजते निमित्तं च इति, आदिशब्देनेन्द्रियधनादयो गृह्यन्ते, अधर्मादीन्यत्राऽपि वीर्य्यस्मृत्यादयो गृह्यन्ते, आन्तरत्वे सम्मतिमाचार्य्याणामाह तथा चोक्तम् इति, विहारो व्यापारः, प्रकृष्टं शुक्लं, तयोः बाह्याऽभ्यन्तरयोर्मध्ये, ज्ञानवैराग्यं तज्जनितौ धर्मौ, केन बाह्यसाधनधर्मेण अतिशय्येते अभिभूयेते, ज्ञानवैराग्यजावेव धर्मौ तमभिभवतः बीजभावादपनयत इत्यर्थः । अत्रैव सुप्रसिद्धमुदाहरणमाह दण्डकारण्यम् इति ॥ १० ॥

